जायाम् । कर्मणि क्तः । सारयतः । **१८६९ सार १८७० कृप १८७१ श्रथ** दौर्बल्ये । दीर्घवतां पाठोऽग्लोपित्वार्थः । सारेः शता । कृपकस्य । कृपेर्ण्वुल् । श्रथयदिति । श्रथेः शता ॥

यो मत्क्षयं स्पृहयते मयि भामितेऽपि
संसूचयत्यरिगुणांश्च मदन्नखेटी ।
तं क्षोटितौजसमगोमितभूमिबधं(द्धं)
शत्रौ कुमारयति मारयतोग्रसेनम् ॥ ५५ ॥

तमुग्रसेनं शत्रौ कुमारयति क्रीडति मारयतं विगतप्राणं कुरुत । यो मम क्षयं स्पृहयते । मयि भामिते कुपिते अपि अरिगुणान् संसूचयति च । मदन्नखेटी मद्दत्तान्नभक्षी । कीदृशम् । क्षोटितौजसं क्षीणबलम् । अगोमितायां अनुपलिप्तायां असंस्कृतायां भूमौ बद्धम् ॥—स्पृहयत इति । **१८७२ स्पृह** ईप्सायाम् । लट् । भामितेति । **१८७३ भाम** क्रोधे । कर्तरि क्तः । संसूचयति । **१८७४ सूच** पैशुन्ये । लट् । अन्नखेटी । **१८७५ खेट** भक्षणे । खेड इत्येके । खोट इत्यपरे । खेटेर्णिनिः । अयं क्षेपे च द्रुमे। क्षोटितेति । **१८७६ क्षोट** क्षये । कर्तरि क्तः । अगोमितेति । **१८७७ गोम** उपलेपने । कर्मणि क्तः । कुमारयति । **१८७८ कुमार** क्रीडायाम् । शता ॥

शील्यं न सामनममीष्विह वेलयामि
पल्यूल्यतां यदुजनो मम वातकोऽपि ।
छिद्रं गवेषयितुमेव तु वासयन्ते
ये ते निवासितधियो ह्यसुभिर्विभाज्याः ॥ ५६ ॥



अहममीषु यदुष्विहेदानीं सामनमनुसरणं शील्यमभ्यसनीयं न वेलयामि प्राप्तकालतया नोपदिशामि । यदूनामनुसरणाभ्यासकालो न भवतीति वदामीत्यर्थः । मम वातकः सेवको यदुजनोऽपि पल्यूल्यतां छिद्यताम् । ये छिद्रं गवेषयितुमन्वेष्टुमेव वासयन्ते सेवन्ते तेऽसुभिर्विभाज्याः पृथक्कर्तव्या मारयितव्याः । यस्मात् पल्यूल्यतां निवासितधिय आच्छादिताभिप्रायाः ॥—शील्यमिति । **१८७९ शील** उपधारणे । अभ्यासस्तत् । 'अचो यत्' । सामनम् । **१८८० साम** सान्त्वप्रयोगे । ल्युट् । वेलयामि । **१८८१ वेल** कालोपदेशे । लट् । कालेत्यपि धातुरित्येके । पल्यूल्यताम् । **१८८२ पल्यूल** लेवनशोधनयोः । कर्मणि लोट् । वातकः । **१८८३ वात** सुखसेवनयोः । गतिसुखेत्येके । ण्वुल् । गवेषयितुम् । **१८८४ गवेष** मार्गणे । तुमुन् । वासयन्ते **१८८५ वास** उपसेवायाम् । लट् । निवासितेति । **१८८६ निवास** आच्छादने । कर्मणि क्तः । विभाज्याः । **१८८७ भाज** पृथक्कर्मणि । यत् ॥

१. 'क्षेपे' इति धातुपाठे. २. 'लवनपवनयोः' इति धातुपाठे.